पेज - 5-7 = 4 विषय - अनुपलब्ध

30x17x0.1 c.m.

महोटिका वार्ताकीमहतीसिंही कंटकारी विद्रकाकुली गुणाः

... ... ...

शंकुलाशकुलादिनी गुणाः कटुकी कटु कायाकेति क्राद्

84

महोटिका वार्त्ताकीमहत्ती सिंही कंट
कीराष्ट्रिकाकुली गुणाः वृहतीग्रा
हिणीहृद्या पाचनीकफवातजित्
उष्णाकुष्ठज्वरश्वासशूलकासाग्नि
मांद्यजित् लघुकण्टकारीनाः कं
टालिकीकंटकिनीकंटकारीनिद
ग्धिका दुःस्पर्शाधावनीक्षुद्राव्याघ्रा
घ्रीदुष्प्रधर्षिणी सिताक्षुद्राचंद्रहा
सालक्ष्मणाक्षेत्रदूतिका हिंगुली
दुर्लभाचांद्रीनाकुलीचमहौषधी
गुणाः कंटकारीसरातिक्ताकटुका
दीपनीलघुः रूक्षोष्णा पाचनी का
सश्वासज्वरकफानिलान् निहंति
पीनसंपार्श्वपीडकृमिहृद्रामयान्
तद्वत्प्रोक्तासिताक्षुद्राविशेषाद्गर्भ
कारिणी लघुपंचमूलनाः ह्रस्वा
ख्यंपंचमूलंस्यात्तच्चभिर्गोक्षुरादि
भिः वल्यंपित्तानिलहरंनात्युत्संख्या
दुर्वृंहणम् दशमूलनाः एताभ्यांपं
चमूलाभ्यांदशमूलमुदाहृतं दोष
त्रयश्वासकासशिरःपीडापतंत्रका
न् तंद्राश्वेदज्वरानाहारुचिपार्श्वरु
जोजयेत् ऋद्धिवृद्धिनाः ऋद्धिःसुखं
युगंलक्ष्मीःसिद्धिःसर्वजनप्रिया॥वृ

द्भिर्गर्भप्रदशीता वृष्या कासक्षयास्र
नुत्. काकोली क्षीरकाकोलीना०
काकोली मधुरा वीरा कायस्था क्षीर
शुक्लिका ध्वांक्षोली वायसोली स्या
त्स्वादुमांसी पयस्विनी. द्वितीया क्षी
रकाकोली सुरा क्षीरिणी मता गु
णाः काकोलीयुगलं शीतं शुक्रलं
मधुरं गुरु जयेत्समीरदाहास्रपित्त
शोषज्वरान्. मेदामहामेदना.
मेदास्नेया शालिपर्णी विज्ञा मेदोभ
या धरा महामेदा वसुच्छिद्रा त्रिदंती
देवतामणिः गुणाः मेदायुगं गुरु
स्वादु वृष्यं स्तन्यं कफापहं वृंहणं
शीतलं पित्तरक्तक्षयसमीरनुत्
जीवकवृषभकनामा० जीवको
मधुरः शृंगी ह्रस्वांगः कूर्चशीर्षकः
दोः वृषभो धीर इंद्राख्यो विषाणी दुर्धरो
वृषः गुणाः जीवकर्षभकौ बल्यौ
शीतौ शुक्रकफप्रदौ हेतेरेः पित्तदा
हास्रकार्श्यवाततृयामपान् ऋषभकव
र्गनामानि ऋषभवर्गोऽष्टभिर्द्रव्यैरे
तैः शीतो तिशुक्रदः गुणाः वृंहणः
पित्तवातास्रशोषघ्नस्तन्यगर्भकृत्
जीवंतीनामा० जीवंती जीवनीजी

3

वाजीवनीयाच[illegible]स्करी शाकश्रेष्ठाजीवभ
द्रामंगल्याजीववर्द्धिनी गुणाः जीवन्ती
शीतलास्वादुस्निग्धादोषत्रयापहा र
सायिनीवलकरीचक्षुष्या[illegible]नीलः ग्राहिणी
घुः मधुयष्टिनाः मधुयष्टीक्लीतनकं
यष्टीमधुमधूलिका यष्ट्याकंमधुकंय
ष्टीमधुकंजलजामधु गुणाः मधुय
ष्टीगुरुः शीतावल्यातृट्छर्दिपित्तजित्
माषपर्णीमुद्गपर्णीनाः माषपर्णीकृ
ष्णवृन्ताकांवोजीहयपुच्छिका मांस
माषासिंहमुखीस्वादुमाषामहास
हा मुद्गपर्णीक्षुद्रसहासूर्यपर्णीकु
रङ्गिणी वनजारिंगणीसिंहीशिंवी
मार्जारगन्धिका गुणाः माषपर्णी
हिमातिक्तारूक्षाशुक्रवलासकृत्
मधुराग्राहिणीशोषवातपित्तज्वरा
स्त्रनुत् तद्वद्वनमुद्गपर्णीत्रिदोष
शमनीलघुः जीवनीयगणनाः जी
वंतीसूर्यपर्णीचकाकोल्यौजीवक
र्षभौ मेदे यष्टीत्तमधुरोजीवनीय
गणोगुरुः गुणाः शुक्रकृद्वंहणःस्री
नःस्तन्यगर्भकफप्रदः रक्तपित्तनुत्

नि०
५

षाशोषज्वरदाहह्नयापहः एरंडरक्तैरं
डनामानि एरंडोदीर्घदण्डः स्यात्तरु
णोवर्द्धमानकः चित्रःपंचांगुलो व्याघ्र
पुच्छो गन्धर्वहस्तकः रक्तैरण्डो हस्ति
कर्णो व्याघ्रो व्याघ्रतलोरुबुः उत्तान
पत्रउरुबुकौनवैरीवचंचुलः गुणाः
एरण्डयुग्मं मधुरं मुष्णं गुरु विनाशये
त् शूलशोफकटीबस्तिशिरःपीडोद
रज्वरान् व्रध्नश्वासकफानाहका
सकुष्ठाममारुतान् तत्फलं भेदनं
स्वादुक्षारमुष्णं समीरजित् कृष्णसा
रिवानाम० सारिवा सारदा स्फोता गो
पकन्या प्रतानिका गोपांगना गोप
वल्ली लताह्वा काष्ठसारिवा सारि
वान्या कृष्णमूला भद्रा चंदनसारिवा
कृष्णा चंदनगोपा च चंदना कृष्णव
ल्ल्यपि सारिवायुगलं स्वादु स्निग्धं
शुक्रकरं गुरु दोषत्रयास्रप्रदरज्व
रातीसारनाशनम् यवासनाम० या
सो मरुद्भवोनन्तादीर्घमूलोयवा
सकः बालपत्रः समुद्रांतो दूरमूलो
तिकंटकः धन्वयासस्ताम्रमूलीडः

राम
५

स्पर्शस्तु दुरालभा कच्छुरानाम्रमूली च
धन्वयासो यवासकः यासः स्वादुरस
स्तिक्तो हिमः पित्तहरो लघुः हंति रक्त
कफभ्रांतीस्तद्वद्धन्वयवासकः (भद्र
चंदन गोपा च चंदना कृष्णपर्णपि)
मुंडीपातीना० मुंडी भिक्षुः परिव्राजी
श्रावणी स्यात्तपोधनी श्रावणाश्रीप
तिर्मुंडे तिक्ता श्रवणशीर्षिका गुणाः
मुंडी तिक्ता कटुः पाके वीर्योष्णा मधुरा
लघुः मेध्या गंडापची कृच्छ्रकृमियो
न्यार्तिपांडुजित् वृहन्मुंडीपातीना
महामुंडी लोमनीया छिन्ना ग्रंथिनिका
स्मृता भूतवृक्षः कुलहलोऽलंवगाः
न्नेकदम्बकः कदम्बपुष्पी मुंडीव
गुणैर्भूमिकदम्बकः अपामार्गनाः
अपामार्गस्तु शिखरी किणिही खरमं
जरी अधःशल्या शेखरिका प्रत्यक्
पुष्पा मयूरकः अपामार्गः सरस्ती
क्ष्णो दीपनः कफवातजित् निहंति
दद्रू सिध्मार्शः कंडूशूलोदरापचीः
रक्तापामार्गनाः अन्यो रक्तो वृंत
फलो वशिरः कपिपिप्पली गुणाः

नि० अपामार्गो हरणोवातविष्टंभीकफनाश
६ नः न्यूनः पूर्वगुणैः श्रेष्ठोतत्फलंरक्त
पित्तनुत् कम्पिल्लनाम० कम्पिल्लोरोच
नोरक्तश्चूर्णकोव्रणशोधनः लोहितो
रक्तशमनोरेचीरंजनकोमतः गुणाः
कंपिल्लः कफपित्तास्त्रक्रिमिगुल्मो
दरव्रणान् हन्तिरेचीकटूष्णंचतच्छा
कंग्राहिशीतलम् दंतीनाम० दंती
गुणप्रियानागदंतीशीघ्रामकूलका
उपचित्रा निकुंभस्याद्विशाल्योदुंबर
छदा आखुकर्णीवृषेरण्डद्रवंतीशं
वरीमता मूषकाह्वासुतश्रेणीप्रत्य
क्श्रेणीचपंक्तिका अथशाकमूली
नाम० शाकमुनिकृत्रिमंचयोवने
संचरेचनम् श्रीवासमहृशामाति
किंचित्तिक्तंचमल्लिनं आमवातः
जयकरं रुचिरंयोवनोद्भवं महाम
दाकरंल – विष्टंभमूलनाशनम्
गदभुजंगान्॥ दंतीद्वयंसरंपाक
रसस्यैकटुदीपनम् तीक्ष्णोष्णंहंति
पित्तास्त्रकफशोफोदरक्रिमीन्
जयपालनाम जयपालंदंतिवीजं राम
६

ख्यातंतत्तित्तिरीफलं जयपालोगुरुः
स्निग्धोरेचीपित्तकफापहः त्रिवृन्ना
मा० त्रिवृत्तुंभौरुणास्त्रिस्राभंडी
केंदीरवाहिनी सर्वानुभूतिस्त्रिवृ
तात्रिपुटासरलाश्चिता गुणाः त्रि
वृत्तिक्तासरारूक्षास्वादुरुष्णासमी
रजित् कटुःपाकेज्वरश्लेष्मपित्तशो
फोदरापहा श्यामात्रिवृन्नामा० त्रि
वृत्कालाकालमेषीकालपर्ण्यर्द्धचं
द्रिका सुषेणास्यान्मालविकामसू
रविदलामता गुणाः त्रिवृत्काला
हीनगुणातस्यास्तीव्रंविरेचनं मूर्छा
दाहमदभ्रांतिकंठोत्कर्षणकारिणी
गुणाः इंद्रवारुणीनामा० इंद्रवारुण्यपींद्र
कावृषभाक्षीगवादिनी ऐंद्रीवारु
त्तुद्रफलाविशालैंद्रीविषादिनी गु
णाः अन्येंद्रवारुणीचित्रफलाचि
त्रामहाफला आत्मरक्षानागदंतीत्र
पुसीगजचिर्भटी श्वेतपुष्पामृगादी
चनथायदासुतामता मरुद्भवाक्षि
भिगुहाचित्रदेवीचकीर्तिता गुणाः
ऐंद्रीवारुण्यंतिक्ताकटुपाकेसरंलघु
वीर्योष्णंकामलापित्तकफप्लीहोदरा
पहं आरग्वधनामा० आरग्वधोरा

कफपित्तहरारूक्षामधुरास
-रेचनी वातकृत्कटुको
पाकेकषायात्रिवृतागुणाः×

नि० ७

8

जवृक्षः शम्याकः कृतमालकः व्याधि
घातः कर्णिकारः प्रग्रहश्चतुरंकुलः
आरोग्यशिंबी स्वर्णका कर्णी दीर्घ
फला मता कुण्डली हेमपुष्पा च का
लिष्या भोनृपद्रुमः स्वर्णशेफालि
का शावकुष्ठसूदननामतत् स्वर्ण
स स्यापित्तलोक्ता स्वर्णद्रुमसमीरि
ता गुणाः आरग्वधो गुरुः स्वादुः
शीतलो मृदुरेचनः ज्वरहृद्रोगपि
त्तास्रवातोदावर्त्तशूलजित् तत्पु
ष्पं वातलं ग्राहि तिक्तं पित्तकफाप
हं तै तन्मज्जा मधुरा पाके स्निग्धं
पित्तसमीरनुत् नीलिनीनामा०
नीलिनी नीलिका ग्राम्या श्रीफला
भारवाहिनी रंजिनी कालिका मे
लानूनी तुत्था विशोधिनी गुणाः
नीलिनी रेचनी तिक्ता केश्या मोह
भ्रमापहा उष्णा हंत्युदरप्लीहवात
रक्तकफानिलान् कटुकीनामाः
कटुका रोहिणी तिक्ता चक्राङ्गी क
टुरोहिणी मत्स्यपित्ता काण्डरुहा
कृष्णभेदा द्विजांगिका अशोकरो
हिणी मत्स्या शकुला शकुलादिनी
गुणाः कटुकी कटुका पाके तिक्ता रू

राम ७